vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# पुनरावर्तनम्

- विश्वामित्रम् अनुगतौ रामलक्ष्मणौ
- बला-अतिबलयोः उपदेशः, अङ्गदेशदर्शनम्
- ताटकावृत्तान्तः, ताटकां हन्तुं विश्वामित्रस्यादेशः
- रामस्य स्त्रीवधशङ्का, दृष्टान्तपूर्वकं विश्वामित्रेण शङ्कानिरासः
- ताटकां हन्तुं रामस्य प्रतिज्ञा

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- तत्-काले, पिशिताश-नाश-पिशुना, सन्ध्या, इव, काचित्, मुनेः, अध्वानम्, तरसा, रुरोध, रुधिर-क्षोद-अरुणा, दारुणा, स्व-अधीने, हनने, पुरीम्, विदधती, मृत्योः, स्व-कृत्य-अत्यय-क्रीडत्-किङ्कर-सङ्घ-सङ्कट-महा-शृङ्गाटकाम्, ताटका

tत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- तत्काले = तस्मिन् समये
- रुरोध = निरुद्धवती
- कथं रुरोध ? तरसा = वेगेन / बलेन
- किं रुरोध ? मुनेः = विश्वामित्रस्य अध्वानम् = मार्गम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value ...

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- का रुरोध ? ताटका
- कीदृशी ताटका ? काचित् सन्ध्या इव पिशिताशनाशपिशुना, रुधिरक्षोदारुणा, दारुणा;
- सन्ध्या इव ताटका

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Heritage

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- सन्ध्या कीदृशी?
- पिशिताशन-आश-पिशुना = राक्षसानां भोजनकालस्य सूचिका,
- रुधिर-क्षोद-अरुणा = कुङ्कुमपुष्पस्य रजः इव रक्तवर्णा,
- दारुणा = पिशाचादिसञ्चारात् भयङ्करी

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- ताटका कीदृशी?
- पिशिताश-नाश-पिशुना = राक्षसानां विनाशस्य सूचिका,
- रुधिर-क्षोद-अरुणा = रक्तस्य पङ्केन अरुणिता,
- दारुणा = स्वस्याः रूपबलाभ्यां भयङ्करी

Vyoma ॥वाचं धेनुमुपासीत॥
Samskritam -Value ...

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- पुनः कीदृशी ताटका? हनने स्वाधीने मृत्योः पुरीं स्व-कृत्य-अत्यय-क्रीडत्-किङ्कर-सङ्घ-सङ्कट-महा-शृङ्गाटकां विदधती
- हनने = मारणादिहिंस्रकार्ये, स्वाधीने = स्वायत्ते सति
- मृत्योः पुरीम् = यमस्य नगरीम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value ...

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- स्व-कृत्य-अत्यय-क्रीडत्-किङ्कर-सङ्घ-सङ्कट-महा-शृङ्गाटकां – स्वकृत्यस्य = मारणस्य, अत्ययेन = विपर्ययेण, क्रीडन्तः = यथेच्छं विहरन्तः, किङ्कराः = यमदूताः, तेषां सङ्घैः = समूहैः, सङ्कटम् = सङ्कुलम्, महत् = विपुलम्, शृङ्गाटकम् = चतुष्पथम् यस्याः तादृशीम्
- विदधती = कुर्वती

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- प्राणस्वीकारः यमकिङ्कराणां कार्यम् । तत्कार्यं ताटकया स्वायत्तीकृतम् इत्यतः यमकिङ्कराः कार्यरहिताः यथेच्छं विहरन्तः यमपुर्याः विशालासु मुख्यवीथीषु संमर्दं जनयन्ति इत्यर्थः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value ...

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- अन्वयः – स्वाधीने हनने (सति) स्वकृत्यात्ययक्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां मृत्योः पुरीं विदधती, पिशिताशनाशपिशुना रुधिरक्षोदारुणा दारुणा काचित् सन्ध्या इव ताटका तत्काले मुनेः अध्वानं तरसा रुरोध ।

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- तात्पर्य्यम् – तस्मिन् समये एव सन्ध्या इव ताटका महर्षेः विश्वामित्रस्य मार्गं निरुद्धवती । (सन्ध्या राक्षसानां भोजनकालसूचिका, कुङ्कुमपुष्पस्य रज इव रक्तवर्णा, पिशाचादीनां सञ्चारेण भयङ्करी, अनुष्ठानकालत्वात् मुनीनां प्रयाणस्य अवरोधिका च । ताटका तु राक्षसानां विनाशकालसूचिका, रक्तपङ्केन अरुणिता, रूप-बलाभ्यां भयङ्करी, स्वभावेनैव मुनीनां प्रयाणस्य अवरोधिका)

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

- तात्पर्य्यम् – किञ्च, इयं ताटका मारणकार्यं स्वायत्तं कृत्वा, यमपुर्याः विशालां मुख्यवीथीं कार्यरहितैः यथेच्छं विहरद्भिः किङ्करसमूहैः समाकीर्णां कृतवती ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# तत्काले पिशिताशनाशपिशुना ....

- पिशिताशनाशपिशुना – पिशितम् अश्नन्ति इति पिशिताशनाः, तेषाम् आशः, पिशिताशनाशस्य पिशुना ।
- पिशितम् अश्नन्ति इति पिशिताशाः, तेषां नाशः, पिशिताशनाशस्य पिशुना ।
- "पिशितं तरसं मांसं पललं क्रव्यमामिषम्" (अमरः)
- पिशिताशः – अच्-प्रत्ययः, पिशिताशनः = ल्यु-प्रत्ययः
- आशः – "अश भोजने" + घञ्, नाशः – "णश अदर्शने" + घञ्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# तत्काले पिशिताशनाशपिशुना ....

- अध्वानम् – नकारान्तः, पुं, २।१ । "अयनं वर्त्म-मार्ग-अध्व-पन्थानः पदवी सृतिः" (अमरः)
- तरसा – "रंहस्-तरसी तु रयः स्यदः", "तरः-सहः-बल-शौर्याणि" (अमरः)। सकारान्तः, नपुं, ३।१
- रुरोध – "रुधिर् आवरणे" – लिट्, प्रथम।१
- रुधिरक्षोदारुणा – रुधिरस्य क्षोदः, रुधिरक्षोदेन अरुणा

# तत्काले पिशिताशनाशपिशुना ....

- स्वकृत्यात्यय... - स्वेषां कृत्यम्, स्वकृत्यस्य अत्ययः, स्वकृत्यात्ययेन क्रीडन्तः, स्वकृत्याययक्रीडन्तः किङ्कराः, स्वकृत्यात्ययक्रीडत्किङ्कराणां सङ्घाः, स्व...सङ्घैः सङ्कटम्, महत् च तत् शृङ्गाटकं च, स्व...सङ्कटं महाशृङ्गाटकं यस्याः सा, ताम्

# तत्काले पिशिताशनाशपिशुना ....

- शार्दूलविक्रीडितम् – "सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम्" – प्रतिपादं १९ अक्षराणि, म-स-ज-स-त-त-गुरुः । सूर्य = १२ (द्वादश आदित्याः), अश्व = ७ (सप्तसप्तिः) ।
- शब्दालङ्कारः – अनुप्रासः, यमकः ।
- अर्थालङ्कारः – उपमा, श्लेषः (सभङ्गः, अभङ्गः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Education

# अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
# तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- अथ, दाशरथेः, कर्णम्, अविशत्, ताटका-गुणः, तथा, धनुर्-गुणः, तूर्णम्, प्राविशत्, तत्-जिघांसया
- अथ = तदनन्तरम्
- अविशत् = प्रविष्टः
- कः अविशत्? ताटकागुणः = ताटकायाः शब्दः

अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- किम् अविशत्? कर्णम् = श्रोत्रम्
- कस्य कर्णम् अविशत्? दाशरथेः = रामस्य
- तथा,
- प्राविशत् = प्रविष्टः
- कः प्राविशत्? धनुर्गुणः = चापस्य मौर्वी

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · ...

# अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
# तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- किम् अविशत्? दाशरथेः कर्णम् = रामस्य श्रोत्रम्
- कथम् अविशत्? तूर्णम् = वेगेन
- किमर्थम् अविशत्? तज्जिघांसया = ताटकायाः हननेच्छया

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
# तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- अन्वयः – अथ ताटकागुणः दाशरथेः कर्णम् अविशत्, तथा धनुर्गुणः तज्जिघांसया तूर्णं (दाशरथेः कर्णं) प्राविशत् ।
- तात्पर्य्यम् – ताटकायाः शब्दः यावता रामस्य कर्णं प्राप्तः, तावता एव तस्याः हननेच्छया तस्य चापस्य ज्यापि तस्य कर्णदेशं प्राप । अर्थात्, ताटकायाः घोरं नादं श्रुत्वा रामः तां हन्तुं झटिति ज्यां कर्णपर्यन्तम् आकृष्टवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
# तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- गुणः – रूप-रस-गन्ध-स्पर्श-शब्दाः इन्द्रियविषयाः / रूप-रस-गन्ध-स्पर्श-संख्या-परिमाणादयः २४ गुणाः (तर्कशास्त्रे) ।
- धनुर्गुणः – धनुषः गुणः । "मौर्वी ज्या शिञ्जिनी गुणः" (अमरः)
- तूर्णम् – "सत्वरं चपलं तूर्णम् अविलम्बितम् आशु च" (अमरः)
- प्राविशत् – प्र + "विश प्रवेशे" – लङ्, प्रथम।१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# अथ दाशरथेः कर्णमविशत्ताटकागुणः ।
# तथा धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया ॥४२॥

- तज्जिघांसया – तस्याः जिघांसा, तया । हन्तुम् इच्छा जिघांसा – "हन हिंसागत्योः + सन् + अ (कृत्) + टाप् (स्त्री) । आकारान्तः, स्त्री, ३।१

- अनुष्टुप् छन्दः ।
- अतिशयोक्तिः अलङ्कारः ।

# ततो भाविनि सङ्ग्रामे बद्धश्रद्धस्य ताटका ।
# स्वप्राणान् रामबाणस्य वीरपाणमकल्पयत् ॥ ४३ ॥

- ततः, भाविनि, सङ्ग्रामे, बद्ध-श्रद्धस्य, ताटका, स्व-प्राणान्, राम-बाणस्य, वीर-पाणम्, अकल्पयत्
- ततः = तदनन्तरम्
- अकल्पयत् = कल्पितवती
- का अकल्पयत्? ताटका

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# ततो भाविनि सङ्ग्रामे बद्धश्रद्धस्य ताटका ।
# स्वप्राणान् रामबाणस्य वीरपाणमकल्पयत् ॥ ४३ ॥

- किम् अकल्पयत्? स्वप्राणान् वीरपाणम् = स्वीय-प्राणरूपं वीरपाणम्

“वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे”

- कस्य वीरपाणम् ? रामबाणस्य = श्रीरामशरस्य
- कीदृशस्य रामबाणस्य ? बद्धश्रद्धस्य = विहितादरस्य
- कुत्र बद्धश्रद्धस्य ? भाविनि सङ्ग्रामे = भविष्यति युद्धे

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

ततो भाविनि सङ्ग्रामे बद्धश्रद्धस्य ताटका ।
स्वप्राणान् रामबाणस्य वीरपाणमकल्पयत् ॥ ४३ ॥

- अन्वयः – ततः ताटका भाविनि सङ्ग्रामे बद्धश्रद्धस्य रामबाणस्य स्वप्राणान् वीरपाणम् अकल्पयत् ।
- तात्पर्य्यम् – ततः ताटका भविष्यति युद्धे विहितादरस्य श्रीरामशरस्य वीरपाणरूपेण स्वप्राणानेव समर्पितवती । अर्थात्, असुरनाशार्थं प्रवृत्तस्य रामबाणस्य प्रथमम् उत्साहवर्धकं पानं ताटकायाः प्राणरूपमेव आसीत् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# ततो भाविनि सङ्ग्रामे बद्धश्रद्धस्य ताटका ।
# स्वप्राणान् रामबाणस्य वीरपाणमकल्पयत् ॥ ४३ ॥

- भाविनि – नकारान्तः, पुं, ७।१
- सङ्ग्रामे – "युद्धम् आयोधनं जन्यम्... सङ्ग्राम-अभ्यागम-आहवाः" (अमरः)
- बद्धश्रद्धस्य – बद्धा श्रद्धा यस्य सः, तस्य
- स्वप्राणान् – स्वस्य प्राणाः, तान् । "पुंसि भूम्न्यसवः प्राणाः" (अमरः)
- वीरपाणम् – वीराणां पानम् । "वा भावकरणयोः" (८।४।१०) इति वैकल्पिकं णत्वम् । वीरपानम् / वीरपाणम्

मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ ४४ ॥

- मुनिः, भृशाश्व-उपज्ञानि, ताटका-माथिने, ददौ, अस्त्राणि, जृम्भक-आदीनि, जम्भ-शासन-शासनात्

- ददौ = प्रायच्छत्
- कः ददौ? मुनिः = ब्रह्मर्षिः विश्वामित्रः

मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ ४४ ॥

- कस्मै ददौ ? ताटकामाथिने = ताटकान्तकाय श्रीरामाय
- कानि ददौ ? अस्त्राणि
- कानि अस्त्राणि ? जृम्भकादीनि = जृम्भकप्रभृतीनि
- कीदृशानि अस्त्राणि ? भृशाश्वोपज्ञानि = भृशाश्वेन आदौ ज्ञातानि
- कस्मात् कारणात् ददौ ? जम्भशासनशासनात् = इन्द्रस्य आज्ञया

मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ ४४ ॥

- अन्वयः – मुनिः जम्भशासनशासनात् भृशाश्वोपज्ञानि जृम्भकादीनि अस्त्राणि ताटकामाथिने ददौ ।
- तात्पर्य्यम् – विश्वामित्रः इन्द्रस्य आज्ञया ताटकान्तकाय रामाय भृशाश्वेन आदौ ज्ञातानि जृम्भकादीनि अस्त्राणि प्रायच्छत् ।

# मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
# अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ ४४ ॥

- भृशाश्वोपज्ञानि – भृशाश्वस्य उपज्ञा ।
- ताटकामाथिने – ताटकां मथ्नाति । नकारान्तः, पुं, ४।१
- ददौ – "डुदाञ् दाने" – लिट्, प्रथम।१
- जम्भशासनशासनात् – जम्भशासनस्य शासनम्, तस्मात् । "जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः" (अमरः)

# सङ्क्षेपः

- ताटकायाः वर्णनम् – तत्काले पिशिताश
- ताटकावधः – अथ दाशरथेः कर्णम्, ततो भाविनि
- जृम्भकादीनाम् अस्त्राणामुपदेशः - मुनिर्भृशाश्वोपज्ञानि






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in